मासिकी पत्रिका


संस्कृतभाषाप्रचारिणी सभा, चित्तूरु, (आ० प्र०) भारतम्

संपुटः ४ | 15 SEPTEMBER 1966 | क्रमांकः ९

भाद्रपदांकः] [मूल्यम् ४० पैसाः

# विषयसूचिका

# भातु भारतम् !

लेखकः – वैद्यः रामस्वरूपशास्त्री
संपादकः, बालसंस्कृतम्, मुम्बापुरी ७७

मुनिभिरर्चितं देवपूजितं
श्रुतिभिरर्चितं शास्त्रचर्चितम् ।
प्रकृतिभूषितं ज्ञानसुन्दरं
धरणिगौरवं भातु भारतम् ॥

सुरसरित्तटं सिन्धुशोभितम्
रुचिरपर्वतं कान्तकाननम् ।
कृषकसंकुलं सस्यश्यामलं
विपुलगौरवं भातु भारतम् ॥

विविधबोदैः सूरिभिश्चितं
विमलबुद्धिभिर्ज्ञानिभिर्युतम् ।
विततकीर्तिभिः कोविदैः स्तुतम्
करुणमानसं भातु भारतम् ॥

हरिनिषेवितं रामपावितम्
मुरधररक्षितं व्यासवर्णितम् ।
त्रिदशगोगुरुब्राह्मणप्रियं
रचितराष्ट्रकं भातु भारतम् ॥

विदितसंस्कृतं ख्यातकौशलं
विभवमंडितं त्यागपंडितम् ।
प्रमतमानुषं स्वर्णभूतलं
सकलसुन्दरं भातु भारतम् ॥

निहितपाकिकं चीनजित्वरं
निरतरूसकं स्वस्य रक्षकम् ।
विपुलसम्पदं धर्मतत्परं
प्रथितविक्रमं भातु भारतम् ॥

सरलसूनृतं ग्राम्यजीवनं
परमभावुकं भव्यमन्दिरम् ।
अनघकेतुकं स्वीयशासनं
भुवनवन्दित भातु भारतम् ॥

संस्कृतभाषोद्धरणसंकल्पः प्रभुताया जनतायाश्च अद्य समुदभवदिति महत प्रमोदस्थानम् । क्लेशैरेव खलु बुद्धिः प्रसरति । अन्यथा स्तब्धा तिष्ठति मण्डूकखादी सर्प इव । प्रतिभायास्तदेव प्रयोजनं यत यदा विपदापतेत् तदा तन्निराकरणाय झटिति यतेत । यद्यपि अनागतप्रतिविधानमेवोत्तमं कार्यं तथापि प्राप्तकालप्रतिविधानं न तावदधमं यथत् यद्भविष्यकार्यम् । अस्मन्नायकैः संस्कृतोपेक्षणे यावत्य आपद आपतेयुस्तावत्यः नालोचिताः । तदस्तुनाम । आपतितासु च बहुमुखीषु तासु तन्निवारणोपायः अन्विष्टः अवबुद्धः संस्कृतप्रचारः तत्त्वेनेति इदमपि सन्तोषकरमेव वर्तते ।

भारतैक्यतायाः एकभाषा आवश्यकी । सा च आंग्ली न कदापि भवेत् । तदंगीकारे अस्माकं देशः भारतं न भवति वयं च न भारतीयाः भवेम । यदा कदावापि आंग्लपिशाचिकाया उच्चाटनमवश्यं करणीयमेव । अपि तु अद्यतनभविष्यति तदसाध्यं भवति । तदर्थमेव हिन्द्याः तत्स्थाननियोजनयत्नः आधीयते बहोः कालात् । परन्तु अद्यैव दाक्षिणात्याः प्रबुद्धाः आसन् औत्तराहभाषायाः तस्याः तथात्वापादने स्वीयप्रांतीयभाषास्सर्वा अपि अधःकृता भवेयुरिति । तेन ते घोषयन्ति स्वभाषां स्वस्वराष्ट्रे सर्वकार-व्यवहार्यत्वेन मानयितुम । कार्यविधानेन भावयन्ति च तास्ता भाषाः कलाशालाबोधनभाषात्वेन निर्धारितुम् । बलात्कारेण हिन्दीभाषायाः प्रसारणेन विरुद्धफलप्राप्तिरेवमासीत । प्रादेशिकभाषाभिनिवेशः जनस्य कियद्दूरं गमिष्यति नैव निर्धारयितुं शक्यते । यद्यपि दाक्षिणात्यानां तृप्त्यै आंग्ल्यपि सहभाषा घोषिता भारतप्रभुताया तथापि भेदभावो न प्रशान्तः । याप्यो रोग इव पदे पदे प्रत्यक्षीभवति भाषाद्वेषः अल्पमधिकं वा । अपि च हिन्द्यैव पीड्यमानानां प्रजानां आंग्लोपद्रवोऽपि अधिकतया अद्य आपतितः । दक्षिणभारते आंग्लीं प्राथमिकशालासु तृतीयकक्ष्यात एव बोधयितुं प्रमुखा उद्युक्ता इति महती दुर्गतिः । मूषिके कोपात गृहे छदौ अग्निसंयोजनमिवैतद्भाति । मातृभाषायाः उच्चारणं न जानाति अक्षराणि तु सुतरां न जानाति बालः तृतीय-

कक्ष्यायाम् । तदात्व एव आंग्लाक्षराणां बोधनं तद्बाधनं च महत् दुःखकरं संभाव्यते । पञ्चमकक्ष्यातः हिन्दीलिपेः तद्भाषायाश्च संयोजनम् कष्टतमम् । एवं क्लिश्यन्ति बालाः बहुविधम् । एवं श्रमेपि भारतीयबालस्य अत्यावश्यकयाः संस्कृत-भाषायाः पठने अवकाश एव न दीयते । पितरः राष्ट्रभाषेति हिन्दीं, अन्ताराष्ट्र-भाषेति आंग्लं च वाचयन्ति स्वबालान् । यत्र कुत्रापि संस्कृतं स्वीकर्तुमभिलषति चेत् बालः तत्र अवरसंख्यान्यूनता, तत्सत्वेपि उपाध्यायहीनता च प्रत्यक्षीभवति । अहं जानामि कुत्रचित् उत्सुकानां विद्यार्थिनां उपाध्यायस्य च सत्वेपि द्वितीय कक्ष्यान्तर्गतविभागस्य स्थापनं न्यगकरोत् प्रधानाध्यापकः । अन्यविषयबोधका उपाध्यायाश्च निरुत्सुकयन्ति बालान् संस्कृतमादतुं, स्वात्मबोधनावकाश (प्रैवेट) संकोचभिया । एवं बहुभिः कारणैः ऐच्छिकस्थानमारोपितं संस्कृतं क्षीयते प्रतिदिनं भारतीयसंस्कृत्या सहैव ।

एतत्सर्वमाकलय्य संस्कृताभिवर्धनाय यं कश्चित् प्रोत्साहमारचयति भारत-सर्वकारः । स्वच्छन्दप्रचारकसंस्थानां कृते अनुदानं यच्छति, पत्रपत्रिकाणां आर्थिकसाहाय्यं करोति; प्राचीनग्रन्थान् मुद्रापयति अल्पमूल्येन प्रदापयति, संस्कृत-विद्यार्थिनां कृते छात्रवृत्तिं दापयति ।

प्रादेशिकप्रभुत्वेष्वपि संस्कृतविषये अनुगुणं संचलनं अनुश्रूयते । आंध्र-प्रदेशसर्वकारेण च संस्कृतभाषाया अनिवार्यता कथं साधनीयेति आलोच्य उचिता-लोचनप्रदानाय संघभाषाभिवर्धनसमितिः काचित् स्थापिता श्रीमतां बूर्गुल रामकृष्ण-रावमहोदयानां आध्यक्ष्येण । सा च समितिः आंध्रप्रदेशे सर्वत्र परिभ्रम्य संस्कृता-भिमानिनां मठाधिपतीनां चाभिप्रायान् संचिनोति । मन्ये एषा समितिः अचिरेणैव आचरणयोग्यां भारतीयसंस्कृतिपरिरक्षणीं विद्याविधानान्तर्गतां संस्कृतबोधनपदवीं निर्धारयिष्यति या अन्यप्रदेशानामपि मार्गदर्शिका भविष्यति । मान्यान् पंडितप्रवरान् विज्ञापये एतत्समयं निष्क्रियतया अयापयित्वा विवेकपूर्णां जनवाणीं श्रावयितुं संस्कृतानिवार्यतासाधने ललितमुपायं सूचयितुम् च ।

# राजाजीकथा २८

## विज्ञाय पुनरागच्छ

लेखकः – आ० वरदराजन्

"दाने सन्तोषो वा आहोस्विदादाने" – इत्याह कश्चिद् ऋषिः ।

निर्धनयुवती काचिदुत्थाय बभाषे – "स्वामिन्! अपत्याय स्तन्यदाने यावान् सन्तोषो मे जायते न तावान् बुभुक्षितायाः भोजनावसरे" – इति सा स्वानुभवं प्रकटितवती ।

ततः काचिन्महिला समुत्थिता – "स्वयमहं पाकं कृत्वा गृहे विद्यमानानां सर्वेषां यदा परिवेषयामि, आहारपदार्थान् सादयामि, तदा नूनं मे महान् संतोषो-जायते, न पुनस्तावान् एकस्या एव मे उपविश्य भुञ्जानायाः" इति स्वानुभूतिं प्रदर्शितवती ।

तदनन्तरं समस्त-भुवन-प्रशस्तवैश्यकुलसमुद्भूतः श्रेष्ठी कश्चित समुत्थितः । "स्वामिन्, अनयोरुभयोरनुभवाविव अहमप्यनुभवविशेषं सत्यमद्राक्षम् । यदाऽहं सम्पादनपरो धनमार्जयन् एकत्रितं सञ्चितं कुर्वन्नास तदा न तावती तृप्तिः न तावान् सन्तोषः, न तावत सुखं वाऽन्वभावि; यदा पुनरहं अन्ततः, स्वार्जितं समेषां सुखाय विनियोक्तुं उद्युक्तः, यदा च सर्वे महताऽनन्देन मां परिवार्य स्थिताः तदैवाऽहं प्रमुदितः, आनन्दवारिधौ मग्नः – इति स्वीयमानन्दानुभवं प्राचीकटत ।

एतेषां महतां अनुभवैः वयमद्य ज्ञानिनः सम्पन्नाः – इति निगमयति स्म ऋषिः ।

* * *

धर्मपुरी ब्राह्मणः कश्चित् प्रत्यहं उषसि उत्थाय काल्यं निर्वर्त्य भिक्षापात्रं कक्षेऽवलम्ब्य वेदमन्त्रानुच्चारयन् उपादानार्थं अग्रहारे गृहं गृहं गच्छन्नासीत् ।

श्रोत्रियममुं सर्वे समाद्रियन्ते । गृहांगणेऽसौ यावत्पदं न निदधाति तावदेवाऽस्मै भूदेवाय सर्वे तण्डुलमर्पयन्ति । सोऽपि श्रोत्रियः हृदयपूर्वकं आशीषि प्रयुज्य गच्छन्नास्त । धनिका निर्धनाः सर्वेऽपि समानरूपेण भिक्षां प्रयच्छन्ति स्म । सोऽपि सर्वान् समानरूपेण आशीर्भिस्संम्मान्य गच्छन्नास्त ।

भट्टाचार्यस्य भार्या स्वपुत्रं वात्सल्यैकनिधानं सह गृहीत्वैव भिक्षां दातुं गच्छति । स्वयं चेद्दद्यात् तर्हि तत्पुण्यं स्वस्मिन्नेव विश्रम्येत; सह पुत्रेण चेत्तर्हि पुत्रं यावत् तत्पुण्यं व्याप्नुयादिति - तस्या भावः । एवं मत्वा सा पुत्रवती सपुत्रैव भिक्षाप्रदानाय गच्छति । किं च, सा तेनैव-तस्य हस्तेनैव भिक्षां प्रदाप्य अन्ते "दत्ता किला भिक्षा" इति पुत्रं आपृच्छ्य सप्रेमभरं तं चुम्बन्ती वर्तते ।

"अंब! अद्य उपादानं अहं ददामि" – इति ब्रुवन्ती केशवस्य यवीयसी भगिनी लक्ष्मीरपि एकैकदा अनुमता सत्यंबया उपादानप्रदानं करोति ।

तदा केशवः पार्श्वे स्थित्वा – "देहि जागरूकतया निधेहि, यथाधो न पतेत्" इति ब्रूते ।

बालानामयं स्वभावः – यत्किञ्चित् भक्ष्यं भक्षयन्ति चेत् पार्श्वस्थेभ्योऽपि बालेभ्यः किञ्चिदेव प्रदाय भक्षयन्ति । सर्वे समं सन्तोषं अनुभवन्तः भुञ्जते ।

अनेनैव प्रकारेण बालाः सम्यक् वर्धमाना अवर्तन्त ।

प्रातिवेशिकी शारदाम्बाऽपि - राघवार्यस्य पत्नी (ते धनिन इति न विस्मर्तव्यम्) स्वपुत्रस्य हस्तेनैव उपादानं प्रदापयति । किं ज्ञातम् ? कारणं किमिति ?

उपादान प्रदानसमये द्वयोर्हस्तयोस्तण्डुलमापूर्य दद्यादिति शास्त्रम् । शारदाम्बयास्तु अयं भावः – यदि मदीयाञ्जलिना भिक्षां दद्यां तर्हि तण्डुलमधिकं प्रदीयेत; बालश्चेत् भिक्षां दद्यात् तर्हि स्वल्पमेव तण्डुलं दीयेत, यथाशास्त्रानुष्ठितं च भवेत्" इति ।

अतः सा प्रातिवेशिकमाचारं स्वयमेवानुसृतवती ।

★ ★ ★

यमः – शारदांब! कुतस्त्वं बालेन उपादानं दापयन्ती आसीः ?

शारदाम्बा – प्रातिवेशिकी भट्टाचार्यस्य भार्याऽपि न त्वेवं कुर्वन्त्यासीत् । अहमपि तामेव सरणिं अनुसृतवती । कोऽत्र दोषः ?

यमो जहास । "गच्छ, गच्छ, सम्यक् भिक्षाप्रदानं विज्ञाय पुनरागच्छ"– इति स तां अन्तरिक्षात् पुनः पृथिवीं अगमयत् ।

★ ★ ★

कृतकृत्यश्च विज्ञश्च दिवं गच्छति शाश्वतम् ।
दुष्टो भ्रष्टो तथाऽज्ञश्च पुनरावर्तते भुवम् ॥

कृतं कर्म च यत् सम्यक् विज्ञायाचरितं भुवि ।
तदेव सुकृतं भूत्वा गच्छन्तमनुगच्छति ॥

कृतं कर्माऽपि यत् सम्यगविज्ञायाकृतं भवेत् ।
विकृतं दुष्कृतं चैव गतमावर्तयत्यहो ! ॥

# सुभाषितानि

श्री यन्० रामनाथार्यैः

( पूर्वानुबन्धः )

विपत्तिष्वव्यथो दक्षः नित्यमुत्थानवान्नरः ।
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ ॥ २०८ ॥

One will always meet with success in life, if he remains unperturhed in misforunes, clever in his dealinas, constantly applying himself in his undertakings, always vigilant and leads a disciplined life.

न व्याधयो नापि यमः प्राप्तुं श्रेयस्समीक्षते ।
यावदेव भवेत्कल्पः तावच्छ्रेयस्समाचरेत ॥ ॥ २०८ ॥

Neither diseases nor the God yama (ie death) will wait till you are capable of doing good to others. Whenever and in whatever way you can do good, do it atonee.

त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥ ॥ २१० ॥

To protect a family an undesirable member be given up; in the interests of a village, an unworthy family should be banished; in the interests of the country, a village should be abandoned and in one's own interest the worldly pleasures should be given up.

न वैराण्यभिजानन्ति गुणान्पश्यन्ति नागुणान् ।
विरोधं नाधिगच्छन्ति एत उत्तमपूरुषाः ॥ ॥ २११ ॥

Greatmen are really those who are indiffe-rent towards injuries done to them, who look at the good qualities and not the blemishes in others, and are friendly towards all beings.

स्मरन्ति सुकृतान्येत्र न वैराणि कृतान्यपि ।
सन्तः परार्थं कुर्वाणाः नात्रेक्षन्ते प्रतिक्रियाम् ॥ ॥ २१२ ॥

Noble persons remember only the good done and do not value the bad deeds of others done to them. Always bent on helping others, they donot retaliate the evil done to them.

[ क्रमशः ]

# राजदम्पती

## पैत्तंवाडि महाकविः० व० रामानुजाचार्यः

कमलापुरनाम्नि कस्मिंश्चिन्नगरे कश्चित राजा आसीत। स कदाचित् मृगयार्थं वनं गतः। तत्र तदैव प्रसूतपुत्रां कस्यचित् वृक्षस्य मूले स्वशावकं मुक्त्वा गच्छन्तीं कांचित व्याघ्रीं दृष्ट्वा मनस्येवमचिन्तयत। "अस्मत्पत्न्यप्येवं प्रसूता भवतु" इति। अथ सः कदाचित् गर्भिण्यां राज्ञ्यां "प्रसवकालिकी शुश्रूषा न करणीया" इति धात्रीः आदिदेश। राज्ञ्यपि उद्यानस्थानां वृक्षलतादीनां जल-सेचनं न कार्यम्" इति रहसि उद्यानपालकं आदिदेश। राजा उद्यानवनं गत्वा उद्यानपालकं वीक्ष्य वृक्षलतादयः अद्य कथं म्लानाः? किमिति जलपूर्णाः न कृताः आलवालपाल्यः? इत्यपृच्छत।

उद्यानपालकः – (सांजलिबन्धं) महाराज, अयं महाराज्यादेशः एवं वर्तते।

राजा – अस्तु इति गृहं गत्वा राज्ञीमपृच्छत।

राज्ञी – वनान्तरस्थितवृक्षलतादीनां के जलानि सिक्त्वा उपचरन्ति? तद्वदत्रापि अस्त्विति अहमादिशम्।

राजा – स्वहृद्गतविषयं कथं ज्ञातमनया इति धात्र्यादीः राज्ञीं उपचरितुं आदिशत। तत् श्लोकः —

यस्त्यक्त्वाऽऽचरितं कार्यं अनाचरितमिच्छति।
सोऽवमानं भजेद्यद्वत राजा राज्ञ्यवमानितः॥

# रूप्यकस्य आत्मालोचनम

न जाने अहं कदा समभवम् प्रथमतः। इदं तु जाने मज्ज्ञाता कश्चित् वराह आसीदिति स च सुवर्णरूप इति च। मम प्राचीनां स्थितिं कथयन्ति केचित् तव समये समये रुजा भवति, तुग्लकशके देवगियात्रावत्सरे त्वं परिवर्तितः चर्मरूपेणेति। चर्मरूपेण मया तदा बहुजनलालनं अन्वभूयत किल। तदा मम नाम किमासीदिति न स्मरामि। तदनन्तरं तु मे पुनः धवलं शुद्धरजतरूपमासीत। रूप्यलोहमयत्वकारणात रैप्यमिति रूप्यमिति मे नाम व्यवहारे योगरूढमासीत। अहं च शुद्धरजतरूपेण वर्तमानं अग्निकोष्ठोपरिस्थापितं द्रवीभूतमभवम्। ततस्तत्रत्या-शिल्पिनः मां मुद्राधानीषु अपातयन्। तत्र च पुरतः पृष्ठतश्च रेखांकितः सविलासं आपणमगच्छम्। कति वा राजानः राज्ञ्यः वा मया धृताः। बह्वः भाषाश्च मया प्रचारिताः। भारतदेशे जनानां पेटिकासु भस्त्रिकासु ग्रन्थिषु कंचुककोटरेषु भित्तिरंध्रेषु भूविवरेषु कूपतलेषु किं बहुना सर्वत्र मया व्याप्तम् कुत्रचित्प्रकाशतया कुत्रचिदप्रकाशतया।

मम परिवारः आसीत् द्रम्मः काकिणीकः आणकः पादकः अर्धक इत्यादयः। तेषु केचन ताम्ररूपाः केचन वंगरूपाः अपरे च आत्मवत् रजतरूपा आपन्। एतत्परिवारपरिबृंहितस्य मे राज्यं अप्रधृष्यमासीत। अन्नस्य वस्त्रस्य विलासस्य व्यवहारस्य च कृते मदपेक्षा आसीत सकलानां जनानाम्। धान्यं पशवः गृहाः क्षेत्राणि चेति सर्वं वस्तुजातं मया आकृष्यते स्म। मद्विना राज्यं न भोज्यं न कान्ताः न प्रान्ताः रोचन्ते स्म।

काले च कियत्यपि अतीते जनानां मय्यरुचिरुत्पन्ना। कारणं पृष्टाः ते अब्रुवन् "त्वां वोढुमशक्ता वयं, त्वां च गोपयितुमसमर्थाश्च। अतः त्वदनुजं कंचन आनयामो बहिः कागलरूपं; यः सर्वथा त्वद्रूप एव वर्तते, अपि तु दुर्बलः दीर्घविशालश्च।

अहं तु अनुजमुखं द्रष्टुं प्रथमतः सकुतूहलोऽभवम्। स चागतः सत्यं मच्छाया तत्र पूर्णतया वर्तते। सः दीर्घचतुरस्रः अहं वर्तुल, सः कृशः अहं स्थूलं,सः स्निग्धः अहं कर्कशः, सः चित्रवर्णः अहं धवलं एतावन्मात्रमेवानयोर्भेदः।

स नोटः अहं च आवां मिलित्वा राज्यकार्याणि निर्वहतः स्म। नावयोः कदापि मतिभेदः गतिभेदो वा आसीत्। केचित् ग्रामीणाः मामेव विश्वस्य सेवन्ते स्म, अपरे व्यापारिणः नागरिकाश्च सौकर्यकांक्षिणः मदनुजम्।

कालक्रमेण नोटस्य प्राबल्यमवर्धत। स मदाज्ञां विनैव द्विक, पंचक, दशक, पंचाशत्क, शतक, पंचशतक सहस्रकान् अशिश्रियत्। स तद्दासो बभूव। अहं तु अनिच्छन्नपि तदविरोधेन कालं गमयन्नासम्। पंचाशत्कपंचशतकसहस्रकाश्च आत्महताः। मम तु तदितरेषां परिचर्या अनिवारिता आसीत्।

एतदेव मम नाशे कारणमासीत्। अनुजश्च मे मदीयं राज्यं क्रमशः आचक्राम। तपस्वि अहं यद्यपि तटस्थभावनया जीवामि तथापि न कष्टान्यतिवर्ते। मद्धनं सकलमपहारितम्। इदानीमहन्तु सत्वरहितं सत् रूपमात्रेणास्मि रौप्यकम्। मम परिवाराश्च परिवर्तिताः। पैसकः द्विपैसकः त्रिपैसकः पञ्चपैसक इत्यादयः मामनुवर्तन्ते। ते च दुर्बला दुर्भगाः मामवमन्वते। इदानीं अहं शतशः खण्डितोस्म। एवं बहुबाधामनुभवति मयि गण्डस्योपरि पिटिका संवृत्ता। भारतीया एव नेतारः मामवामूल्ययन्। अर्जुनो भीष्ममिव मां अधः अपातयन्। अहमस्मि अद्य गत्यंतरहीनः जानुभ्यां प्रसर्पामि। मदनुजस्यापि मत्समानैव गतिरासीत्।

अहमिदानीं आहाराय पानीयाय किं बहुना जीवितायैव अन्यमुखं प्रेक्षमाणं कालं यापयामि।

ममाधःपातनेन भारतस्यैव अतीवदुर्दशा संघटिता। विदेशऋणं च अर्ध-मभिवृद्धं, वृद्धिश्च तथैव परांकोटिमारूढा। यन्त्रादिविदेशवस्तूनि च महार्घाणि सञ्जातानि। तत्क्रयणासामर्थ्यात् परिश्रमाश्च स्थगिता वर्तन्ते। देशीयानि च वस्तूनि द्विगुणितमूल्यकानि अक्रय्याणि समपद्यन्त।

नेतारश्च स्वकृत्यमकृत्यं अद्य जानन्ति । किं तेषां ज्ञानेन अद्य भविष्यति । विपच्च शिरसि निपतिता । अधुनापि तन्निवारणप्रयत्नाश्च कर्तव्या एव । यदि फलिष्यन्ति स्वशक्तित्वेन घोषयितुं शक्यते अन्यथा दैवकृत्यमिति तं दूषयितुम् ।

विलासालससाहाय्यभोगभाग्यादिरोधने ।
रूप्यमूल्यं प्रवर्धेत वर्धेतापि च भारतम् ॥

अभिवृद्धिप्रणालीनामविरोधे कृते सति ।
रूप्यमूल्यं प्रवर्धेत वर्धेतापि च भारतम् ॥

देशवस्तुप्रयोगे च विदेशीयनिरोधने ।
रूप्यमूल्यं प्रवर्धेत वर्धेतापि च भारतम् ॥

## सङ्घभाषा (क्लासिकल् लान्ग्वेज्) भिवर्धकसमितेः शुभागमनम्

आंध्रदेशप्रभुत्वप्रतिष्ठापिता संघभाषाभिवर्धकसमितिः 30 — 8 — 66 दिने राज्यक्षा एतत्सभामात्मागमनेन पावितवती ।

| | |
|---|---|
| श्री बूर्गुल रामकृष्णरावमहोदयः | अध्यक्षः |
| श्री चि. मार्कण्डेयशास्त्री | कार्यदर्शी |
| श्री जटावल्लभः पुरुषोत्तमः | सदस्यः |
| श्री यं. आर. अप्पारावः | " |
| श्री क. लक्ष्मणशास्त्री | " |
| श्री एस्. टि. पि. वि. कूर्माचार्यः | " |

एवमादयः महानुभावाः तत्रासन् ।

समितिश्च सभया तिरुपति नगरात् सादरमानीता अतिथिभवने निवासिता। संस्कृतसभा च कायमानादिभिरलंकृता नगरप्रमुखैः संस्कृताभिमानिभिश्चापूरिता । सायं पञ्चवादनसमये समितिसदस्याः समुपस्थिताः स्वागतादिभिः सम्मानिताः । सभाया भवनं, ग्रन्थालयं, वाचनालयं, प्रकाशितानि पुस्तकानि, गैर्वाणीं पत्रिकां परीक्षाप्रणाल्यादिकं च दृष्ट्वा अमोघाविरतसंस्कृतप्रचारकृषिं सभायाः प्रत्यक्षतोनुभूय ते भृशं समतुष्यन्। पुरप्रमुखसहकारेण सभया संसिद्धा बहुभिः हस्ताक्षरिता च काचन विज्ञापना समित्यध्यक्षस्य हस्ते समर्पिता । समितिसभ्याश्च उपस्थितान् संस्कृतप्रेमिणः प्रमुखान् संस्कृताभिवृद्धिविषये बहु पृष्ट्वा उत्तराण्याददुः । ततश्च समितिः चातुर्मास्यव्रतनिष्ठया एतत्पुरमधिवसतः महानुभावान् श्रीश्रीकूडलि शृंगेरि-पीठाधिपान् स्वशिरसा अमानयत् । तत्र च संस्कृतविषये स्वामिभिः सूचितान् उपायांश्च ते अगृह्णन् ।

# संस्कृतसभासमर्पित विज्ञापनायाः संग्रहः

1. भारतप्रभुत्वस्य आन्ध्रप्रदेशप्रभुत्वस्य च कृते कृतज्ञतामाविष्कुर्मः यत्ताभ्यां संस्कृतस्य समुन्नत्यै इदानीं यत्न आधीयते ।

2. संस्कृतभाषायाः आदरणीयं स्थानं दातुं अधो निर्दिष्टाः उपायाः सूच्यन्ते-

(क) संस्कृतव्याकरणं सरलतया रचयितव्यं बोधनीयं च बालकेभ्यः येन कोऽपि तां भाषां न कठिनां भावयेत् ।

(ख) सर्वकारः रामायणमहाभारतादिभ्यः सुलभोपयोगिनः अंशान् मुद्राप्य अमूल्यमल्पमूल्येन वा दद्यात समुत्सुकेभ्यः येन तेषामुत्साहः पुरोगामी फलितश्च भवेत् ।

(ग) संस्कृतभाषाप्रचारिसभासदृश्यः संस्थाः प्रोत्साहयितव्याः सर्वकारेण अनुदानेन अनुमोदनविधानेन च ।

(घ) भूतपूर्वाणां वर्तमानानां च संस्कृतकविपण्डितानां जीवितविशेषा अवश्यं योजनीयाः तेषां च सुलभकविताांशाश्च तत्र तत्र संस्कृतांध्र-पाठ्यपुस्तकेषु ।

(ङ) संस्कृतविद्यार्थिभ्यः निश्शुल्कविद्या निश्शुल्कपुस्तकप्रदानं इत्यादिकं हिन्दीपठितृभ्य इव प्रदेयम् । अपि च विद्यार्थिवृत्तिः पारितोषिकं च तदधिकतया संस्कृतविद्यार्थिभ्यः प्रापणीये ।

(च) संस्कृतपाठशालाविषये अवरविद्यार्थिसंख्यादिनिर्बन्धाः प्रशिथिलयितव्याः, अपि च संस्कृतविद्यालयानां पूर्णमनुदानं प्रदीयेत ।

(छ) संस्कृतोपाध्यायानां संख्यादिनियमं दूरीकृत्य तत्सेवावत्सरमात्र-पर्यालोचनेन पदवीवृद्धिः प्रतिज्ञातव्या । उन्नतविद्यालये प्रथमश्रेणीकः संस्कृतपंडितः, कलाशालायां च प्रत्येकं प्राध्यापकश्च अवश्यं नियोज्यः ।

(ज) भाषासमितेः निवेदिकामनुसृत्य हिन्द्याः आवश्यकपाठ्यता नैवास्ति। अतो वयं सूचयामः हिन्दीस्थाने संस्कृतम् उन्नतपाठशालासु पञ्चमकक्ष्यामारभ्य दशमकक्ष्यापर्यन्तं नियतं बोधयितुम् । संस्कृताभिज्ञः लीलयैव वर्धयेत् स्वीयं हिन्दीज्ञानम् ।

(झ) अथवा – पञ्चमकक्ष्यातः सप्तमकक्ष्यापर्यन्तं संस्कृतं अनिवार्यतया बोधयेत्, अष्टमकक्ष्यातः दशमीपर्यन्तं च मातृभाषायै प्रदत्तानां कालखण्डानां अष्टानां मध्ये त्रीन् आच्छिद्य त्रिषु संस्कृतं, पञ्चसु मातृभाषेति विभागेन बोधनक्रमः नियमयितव्यः । एषा रीतिः अधुना अष्टमकक्ष्यायां विकल्पिता वर्तते । सैव नित्यत्वेन स्वीकृत्य आन्तमनुवर्तनीयेति सूच्यते केवलम् ।

(ञ) अथवा – आधुनिकप्रणाल्यां हिन्द्याः कृते त्रयः कालखण्डाः प्रदत्ताः । ते च षट्त्वेन वर्धयितव्याः । तथा च तत्र त्रिषु हिन्दीं त्रिषु च संस्कृतं, प्रबोध्य ५०+५० अंकभावनया एकीकर्तव्यम् । एतेन संस्कृतस्य अनिवार्यता, हिन्द्याः परिपुष्टिः च सेत्स्यति । तदावश्यकाः कालखण्डाश्च प्राच्योन्नतपाठशालास्विव अनावश्यकविषयान्तरेभ्यः आच्छिद्य प्रदातव्याः ।

(ट) हैन्दवदेवादायधर्मादायविभागः देवालयायात् मठायात् प्रतिशतं पंचभिः संस्कृतपाठशालादिनिर्वहणमाज्ञापयेत् । संस्कृतविद्यार्थिभ्यः निश्शुल्कविद्याभोजनप्रदानमनुमन्येत ।

(ठ) सर्वकारनियोगिनां विशेषतश्च देवालयमठनिर्वाहकाणां च संस्कृतज्ञानं विश्वविद्यालयप्रवेशस्थायि अत्यावश्यकं समाज्ञापयेत । तथैव मण्डलाधिपाः सन्धिविग्रहकारिणश्च संस्कृतेन सहैव विश्वविद्यालयोपाधिविभूषिताः भवेयुर्नियतम् ।

(ड) संस्कृतप्रचारसभादिस्वतंत्रसंस्कृतप्रचारकसंस्थाभिः निर्वाह्यमाणाः परीक्षाः सर्वकारेण माननीयाः। अत्र विशेषत इदं निवेद्यते यत् संस्कृतभाषाप्रचारिण्यास्सभायाः "कोविदोपाधिः" उन्नतपाठशाला-संस्कृतबोधनयोग्यत्वेन अंगीकार्यः।

(ढ) संस्कृतबोधनशिक्षालयाः तत्र तत्र बहुलसंख्यया निर्वाह्याः येन संकल्पिता संस्कृताभिवृद्धिः अचिरेणैव सिद्ध्येत्।

## श्रीव्यासाश्रमाधिपतीनां श्रीविमलानन्दस्वामिनां सूचनानां संग्रहः

१. सर्वस्या भारतीयस्य संस्कृतभाषा अवश्यपठनीया भवेत्।

२ S. S. L. C. पर्यन्तं वा सा अवश्यपठनीया भवेत।

३. प्रकृते पब्लिकस्कूलानां व्यामोहोधिको वर्तते। भातीयशिशूनां कोमलेषु मनस्सु एवं पाश्चात्यभाषासंस्काराणां बलात्प्रवेशनं अतीव विनाशकरम्। अतः देशारिष्टिदायकं इदं विधानं उन्मूल्य, तदुद्दिष्टधनादिकं संकृताभिवर्धनाय उपयुज्येत।

४. संस्कृतच्छात्राणां कृते यावद्विद्याभ्यासं छात्रवृत्तिः कल्पनीया।

५. संस्कृतविदुषां च औद्योगिकप्रतिपत्तौ इतरसमानता साधनीया।

६. प्राच्योन्नतपाठशालानां संस्कृतबोधने विशिष्टतां संरक्षेत।

७ शुद्धसंस्कृतपिपठिषूणां योग्यं सहायसंपदं प्रकल्प्य यथापूर्वं प्रवेश-विद्याप्रवीण-शिरोमण्यादिपरीक्षाणां विषये प्रोत्साहनार्थं बृहतीः छात्रवृत्तीः निर्वहेत।

# श्री वासवकन्यकापरमेश्वरी-

## सुप्रभातपञ्चत्रिंशतिः

रचयिता – चित्रकविरत्नं बच्चु सुब्बरायगुप्तः

उत्तिष्ठ वासवीकन्ये ! प्राचीं प्राप्नोति भानुमान् ।
गायन्ति मङ्गलं गीतं भक्तास्त्वत्पादसेवकाः ॥ ॥ १ ॥

उत्तिष्ठ वासवीकन्ये ! क्रमाल्लुप्यन्ति तारकाः ।
चलन्ति पक्षिसङ्घाश्च दीपास्तेजो विवर्जिताः ॥ ॥ २ ॥

उत्तिष्ठ वासवीकन्ये ! पूजासक्ताश्च नैष्ठिकाः ।
द्विजाः पठन्ति वेदादीन् नित्याग्निमपि कुर्वते ॥ ॥ ३ ॥

उत्तिष्ठ वासवीकन्ये ! मन्दं चलति मारुतः ।
गच्छन्ति नार्यो भूषाढ्या आनेतुमुदकं नदीम् ॥ ॥ ४ ॥

उत्तिष्ठ वासवीकन्ये ! कार्यासक्ता जनव्रजाः ।
प्राप्नोत्यरुणतां प्राची हिमांशुस्तेजसाच्युतः ॥ ॥ ५ ॥

जय भक्तपराधीने ! जय वासविकन्यके !
जय वैश्यकुलांबोधिसुधांशो ! मंगलं कुरु ॥ ॥ ६ ॥

जय श्रीकुसुमश्रेष्ठिकन्ये ! पेनुगोण्डवासिनि ।
जय पर्वतपुत्रवंशसंभूते ! मंगलं कुरु ॥ ॥ ७ ॥

जय सौन्दर्यवाराशिवेलातिक्रान्तविग्रहे ।
जय भक्तार्तिविध्वंसिकटाक्षे ! मंगलं कुरु ॥ ॥ ८ ॥

जय कान्तामतल्लीनां यशःपुञ्जविधायिनि !
जय नीलसरोजाभनेत्रान्ते ! मंगलं कुरु ॥ ॥ ९ ॥

जय कामादिषाड्गुण्यबन्धोज्झितमनोम्बुजे !
जय कारुण्यान्तरङ्गसंवृते! मङ्गलं कुरु ॥ ॥ १० ॥

प्रातर्नमामि तव पादसरोजयुग्मं
प्रातः स्मरामि तव दिव्यमनोज्ञतत्त्वम् ।
प्रातर्वदामि तव मङ्गलनामधेयं
प्रातः करोमि तव कोमलमूर्तिपूजाम् ॥ ॥ ११ ॥

निर्माल्यजातमपि पूर्वदिने विसृष्टं
सम्मार्जयामि मम पाणियुगेन प्रातः ।
प्रातर्ददामि नवहेममयासनं च
प्रातर्ददामि मृदुपादयुगे सुपाद्यम् ॥ ॥ १२ ॥

प्रातर्ददाम्यरुणहस्तयुगे सुमार्घ्यं
सन्नारिकेलपरिशुभ्रजलेन चापि ।
दध्ना धृतेन पयसा मधुशर्कराढ्य-
तोयेन हेमकलशेषु च पूरितेन ॥ ॥ १३ ॥

त्वां स्नापयामि यमुनादिनदीजलैश्च
प्रातः करोमि सुविनीलदुकूलरम्याम् ।
लावण्यशोभिरमणीयललाटभागे
कस्तूरिकातिलकमल्पमलङ्करोमि ॥ ॥ १४ ॥

हेमादिनिर्मितसुरत्नविभूषणाढ्यं
कण्ठं करोमि तव, कर्णयुगेऽर्पयामि ।
सत्कुण्डलद्वयममूल्यममोघकान्ति
प्रातः करोमि शुभगन्धविलेपनाढ्याम् ॥ ॥ १५ ॥

प्रातः करोमि सुमगुम्फितकेशपाशां
प्रातर्ददामि कपिलागरुधूपमम्बे!
आज्येन युक्तमपि देवि! त्रिवर्तिदीपं
नैवेद्यमच्छकलमान्नयुतं गुडेन ॥ ॥ १६ ॥

मिश्रं च पञ्चविधमत्र निवेदयामि
कर्पूरकुङ्कुमलवङ्गमृगीमदाढ्यम् ।
एलाढ्यपूगकलितं मृदुनागवल्ली-
पर्णैः सुधासमसितैः सुमकोमलैश्च ॥ ॥ १७ ॥

ताम्बूलमन्वितमभीप्सितमर्पयामि
नाम्नां शतैर्दशशतैः स्तुतिमातनोमि ।
सद्दक्षिणामपि ददामि सुवर्णरूपां
देवि! प्रदक्षिणमनेकविधं च कुर्वन् ॥ ॥ १८ ॥

शीर्षेण वासवि! नमांसि शतं करोमि
त्वां बीजयामि चमरीमृगवालकेशैः ।
आन्दोलिकां कनकदण्डसितातपत्रं
सर्वोपचारमखिलं च समर्पयामि ॥ ॥ १९ ॥

भक्तास्त्वदीयपदसेवनमानसास्ताः
सन्त्यज्य नैजगृहसङ्गतकार्यजातम् ।
आयान्ति भक्तिसहिताश्च कुतूहलाढ्याः
उत्तिष्ठ दर्शय च मूर्तिममूल्यकान्तिम् ॥ ॥ २० ॥

नखाग्रकान्तिविद्रवन्नमत्तमोगुणे !
हरिद्रलक्तपादयुग्मधूतपङ्कजे !
मृदूरुयुग्मकान्तिधूतकेलिकाद्रुमे !
मृगेन्द्रसाम्यभासिसंशयात्तमध्यमे ! ॥ २१ ॥

त्रिरेखिकासुशोभिकम्बुकण्ठभूषिते !
प्रसन्नहासभक्तलोकमोक्षदायिके!
सुनासिकाविभूषिकाविधूततारके!
दयार्द्रवाक्यमाधुरीविनिर्जितामृते ! ॥ २२ ॥

सुधावृताधरोष्ठधूतबिम्बसत्फले !
सुनासिकाऽद्वितीयकान्तिधूतचम्पके !
कपोलकान्तिधूतपद्मरागदर्पणे !
विलोचनद्वयान्तधूतषट्पदव्रजे ! ॥ २३ ॥

मुखारविन्दकान्तिधूतचन्द्रमण्डले !
विनीलकेशपाशनिर्जिताभ्रमण्डले !
स्वभक्तलोकमोक्षदानबद्धकङ्कणे !
सुविष्णुवर्धनाह्वराजदर्पदंशके ! ॥ २४ ॥

सुरेन्द्र मुख्यदैवतस्तुताङ्घ्रिपङ्कजे !
शताधिकद्वयादिगोत्रवैश्यरक्षके !
सदैकु बच्चु सुब्बरायवैश्यसंस्तुते !
प्रभातमास जागृहि प्रफुल्ललोचने ! ॥ २५ ॥

# सुलभपाठमाला २६

## पाठशाला

अस्माकं पाठशाला समीपे वर्तते । पाठशालायां चत्वारः उपाध्यायाः वर्तन्ते । चतस्रः उपाध्यायिन्यः च वर्तन्ते । पंचशतं बालाः बालिकाश्च विद्यन्ते । तेषु चतुश्शतं बालाः अवशिष्टाः बालिकाः । शालायां पंच कक्ष्याः सन्ति । एकैकस्यां कक्ष्यायां द्वौ विभागौ स्तः । अस्माकं प्रधानोपाध्यायः अतीव दया-शीलः । पाठशाला प्रातः दशमघंटातः सार्धचतुर्घंटापर्यन्तं चलति । प्रातः प्रार्थनानन्तरं बोधनं आरभ्यते । सप्त[1]कालखंडाः भवन्ति । प्रतिकालखण्डं पंचचत्वारिंशन्निमेषा भवन्ति । प्रातः द्वयोः कालखंडयोरनन्तरं दशनिमेषपर्यन्तं [2]विश्रान्तिः भवति । तदा चतुष्खण्डानन्तरं च एकघंटाकालः [2]विरामो भवति तत्र विद्यार्थिनः उपाध्यायाश्च भोजनादिकं निर्वर्तयन्ति । ततः मध्याह्ने द्वितीयघंटातः पाठाः पुनः प्रारभ्यन्ते । कालखण्डद्वयानन्तरं पञ्चनिमेषात्मको विरामः भवति ।

प्रतिकालखण्डं उपाध्यायाः परिवर्तन्ते तैरसाकं पाठांशाश्च । मातृभाषा आंग्ली गणितं विज्ञानं पौरधर्मः व्यायामः क्रीडा इत्येवमादिका अनेके अंशाः परिवर्तन्ते प्रतिकालखण्डं प्रतिदिनं प्रतिसप्ताहं च । अस्माकं उपाध्यायस्य च आसनानि भवन्ति [3]अपवरके । बालासनानां [4]मंचा इति नाम । एकैकस्मिन् मंचे त्रय इति गणनया वयं तत्रोपविशामः । उपाध्यायासनस्य [5]प्रासनमिति नाम । तत्र सः उपविशति । अस्माकं उपाध्यायस्य पुरतः [6]चतुष्पद्यो भवन्ति । वयं तत्र पुस्तकादिकं निक्षिपामः तदाधारेण लिखामश्च । भित्तौ [7]कृष्णफलकः कश्चन भवति । उपाध्यायः तदुपरि तदा तदा क्लिष्टं विषयं विलिख्य विवृणोति । वयं च तं अस्माकं पुस्तकेषु लिखामः । उपाध्यायश्च अस्माकं पुस्तकानि परीक्षते शुद्धं लिखितं वा नवेति ।

व्यायामोपाध्यायश्च अस्माभिः देहपरिश्रमं कारयति । सः अस्मान् उत्थापयति बाहू प्रसारयति सङ्कोचयति पादाभ्यां गमयति पार्श्वतः परावर्तयति कुब्जयति ऋजूकरोति । सः अस्मान् क्रीडयति – [8]उल्लंघनम्, [9]दूरलंघनम्, धावनम्, [10]पादकन्दुकः, [11]कन्दुकप्रक्षेपः, [12]कन्दुकदंडिका, [13]कन्दुकजालिका, इत्यादयः अस्माकं क्रीडाः भवन्ति [14]क्रीडांगणे ।

**अर्थः**

1 पिरियड
2 इन्टरवेल्
3 रूम्
4 बेंच
5 चेर्
6 टेबुल्
7 ब्लाक्बोर्ड
8 हैजंप्
9 लांगजंप्
10 फुट्बाल्
11 थ्रो.बाल्
12 क्रिकेट्
13 बाट्मेंट
14 प्लेग्रौंड

## हीरमण्डले प्रमाणपत्रवितरणोत्सवः

हीरमण्डलोन्नतपाठशालायां स्वातंत्र्यदिनोत्सव - सन्दर्भे श्री यं. वि. नरसिंह M.A.,B Ed., महोदयाः आध्यक्ष्यमवहन् । संस्कृतभाषाप्रचारिण्यास्सभायाः परीक्षासु उत्तीर्णेभ्यः माणवकेभ्यः प्रमाणपत्राणि सदुपदेशपूर्वकं अध्यक्षेण वितीर्णानि । हिन्दीपंडितस्य श्री अधिकार्ल राममूर्तेः वन्दनसमर्पणेन समावेशस्संपूरितः ।

★

## महालक्ष्मीव्रतोत्सवः

26—8—66 तिथौ शुक्रवासरे तिरुपनिसमीपे नडवल्लूरनामके ग्रामे ज्योतिस्संश्लेषविद्यापीठे श्रीमहालक्ष्मीव्रतमहोत्सवः सुसम्पन्नः । ग्रामोत्सवः पूजा होमः स्तोत्रपाठपरीक्षा वेदान्तोपन्यासा हरिकथाकालक्षेप इत्यादिकानि सुसम्पन्नानि ।

तत्तत्कार्यक्रमान्ते स्तोत्रपाठपरीक्षोत्तीर्णानां विद्यार्थिनां योग्यतापत्राणि प्रथमद्वितीयादिपारितोषिकाणि प्रदत्तानि, विदुषां सत्कारश्च कृतः ।

अस्मिन्नेव सन्दर्भे विद्यापीठाध्यक्षेण श्रीमता वरदराजमहोदयेन हरिकथा-कालक्षेपेण श्रोतॄणां मनांसि आवर्जितवते श्री के. लक्ष्मीरमणभागवताय "सरसहरिकथापरिबृढः" इति श्री A. रामाचार्याय "हार्मोनीमेलनचणः" इति च बिरुद प्रदान माचारतम् ।

### सन्तापवार्ता

एतत्सभायाः नागपट्टणशाखायाः अध्यक्षः सुगृहीत नामधेयः श्री यस्. नारायणस्वामी B. A., B. L., महोदयः 2—7—66 दिने दिवं गतः इति भृशं सन्तप्तास्स्मः ।

तिं. कं. तिरुवेङ्कटाचार्यः,
प्रधानमन्त्री.

## श्रीकालहस्तिनगरे शिल्पागमसदः

प. प. आचार्य कांची कामकोटिपीठाध्यक्षाणां श्री शङ्कराचार्याणां संकल्पेन एतत्सदः 2–9–66 दिने उपक्रान्त सत् 8–9–66 पर्यन्तं महावैभवेन प्रावर्तत् । देशदेशान्तरेभ्यः बहवः आगमिनः शिल्पिनः पंडिताश्च समागमन् । नटराजरंगस्थलनाम्ना पञ्चमुखेश्वरालयप्रांगणे सवितानं बृहत् कायमानमर्पितं बहुशिल्पविशेषचित्रपरिशोभितपार्श्वकं आनन्दयत् प्रेक्षकान् । अपि च गिरितटशिलापार्श्वे चित्रिताः शिवकल्याणदारुकावनविहारादिकाः प्रतिमाः हरन्ति द्रष्टृजनचित्तम् । शास्त्रविचाराः उपन्यासाः अष्टावधाननर्तनादिका क्रियाः तैस्तैरभिज्ञैः प्रदर्शिताः । ते श्रीस्वामिभिः अनर्घादरेण सम्मानिताः धन्यान् आत्मनः अमन्यन्त । वैदेशिकाश्च बहवः अत्रागत्य सदसि स्वामिनां दर्शनसम्भाषणादिकं च अनुभूय अमोदन्त ॥

## खण्डान्तरेषु संस्कृतवाङ्मयप्रभावः

श्रीकालहस्तिपुरे आगमशिल्पसदोनिर्वाहकाणां पूज्यतमानां श्री कांची कामकोटि शङ्कराचार्यस्वामिपादानां दर्शनार्थं आगतवान् डा. लोकेशचन्द्रः (भारतीयसंस्कृतिसंबन्धान्तर्जातीयसंस्थायाः देहलीस्थायाः डैरेक्टरः (निर्वाहकः) स्वानुभमेवमवदत्-

सैबीरियादेशे कस्मिंश्चित् देवालये द्वे जन्तुप्रतिमे स्तः भारतीयजन्तुत्वेन ययोः तत्र प्रथास्ति। तत्र देशे पाणिनीयं व्याकरणं तद्व्याख्याश्च 13, 14 शताब्दे लिखितपुस्तकरूपेण वर्तन्ते।

कतिभ्यश्चन वर्षेभ्यः पूर्वं सोवियट्प्रतिनिधयः काशीं आगच्छन्। केचित तेषु गंगायां स्नातुं अपरे आयुर्वेदौषधालयान् द्रष्टुं उद्युक्ता अभवन्। रष्यादेशे षट्सहस्रसंख्याकाः मुख्यतमाः भारतीयसंस्कृतग्रन्था वर्तन्ते। तेषु भारते एकसहस्रमेवाद्य लभ्यन्ते। अन्ये च ततः आनेया एव। मंगोलियादेशे भारतीयशिल्पशास्त्रमेव आद्रियते। तद्देशस्य उपप्रधानिनः भार्यायाः नाम इन्दिरी इति। तायलांडदेशे मनुस्मृतेरेव शिक्षास्मृतित्वेन स्वीकारः वर्तते। जपानदेशे सहस्रदेवालयेषु संस्कृतशिलाशासनानि वर्तन्ते।

# पण्डितसत्कारः

★

26—8—66 दिने चित्तूरुमण्डलान्तर्गते बोम्मसमुद्रग्रामे संस्कृतपंडितस्य साहित्यशिरोमणेः श्री मे. मुनिरेड्डिमहाशयस्य सम्मानोत्सवः वैभवेन प्राचलत्।

ग्रन्थाविष्करणमहोत्सवः 12—9—66 दिने मण्डलप्राड्विवाकानां श्री देवता सुब्बरावुमहोदयानां आध्यक्ष्येण, श्री चे. सुब्रह्मण्यशास्त्रिरचिता ललितास्तुतिः श्री रामचन्द्रारेड्डि रचितं रामचन्द्रशतकं च आविष्कृते।

14-9-66 दिने स्थानिककलाशालांध्रोपन्यासकप्रवरेण श्रीमता वि. वि. यल्. नरसिंहरावमहोदयाध्यक्ष्येण प्रचलितायां सभायां श्रीमता मेड्वरं वेंकटनारायणशर्मणा रचितः साहित्याकाडमीसम्मानिता च ऋतुसंहिता स्थानिकग्रन्थालयाधिकारिभिः आविष्कारिता।

भारतरत्न, राष्ट्रपति

# श्री राधाकृष्णमहोदयप्रशस्तिः

लेः खण्डविल्लि सूर्यनारायणशास्त्री

1. सर्वलोकप्रियकरं सर्वविज्ञानसज्जितं ।
लोकाऽभ्युदयकर्तारं राधाकृष्णं स्मराम्यहम् ॥

2. न याचे गजाऽलिं न वा वाजिराजिं
न वित्तेषु चित्तं मदीयं कदाचित् ।
सदा तत्वविज्ञानपीयूषधाराऽ
नुभूत्या सुपुष्टं जनं तं भजामि ॥

3. य स्सर्वदामानवसंघभूत्यै
संकल्प्य चित्तं व्यवसायमेकं ।
देशे विदेशेष्वपि मानवानां
मनांसि केदारसरूपकामि ॥

4. संगृह्य यः कंटकितानि तानि
धर्मेण कृष्ट्वाऽसमतायुतानि ।
महामतिः भूतलतत्ववेत्ता
क्षेत्राणि चक्रे समतायुतानि ॥

5. सत्यं तथा शांतिमतोप्यहिंसा-
रूपं च बीजत्रयमल्पजीवं ।
संपाद्य स्वीयामृतहस्तसेकात्
भूयोऽपि तान् स्वांकुरितान् चकार ॥

6 क्षेत्रेषु तन्मानवचित्ररूपे
ष्वारोप्य यत्नैर्बहु पोषयित्वा ।
क्षेत्राणि तान्यद्भुततत्वरूप-
सस्यैर्युनान्याफलवंत्यतानीत ॥

7. पञ्चवर्षप्रणालीभिः साऽन्नवृद्धिर्यथा भवेत् ।
रीत्याऽनया स लोकेभ्यः विज्ञानान्नाद्यःादलम् ॥

8. एवंगुणैः अखिललोकशिवंकरैस्तैः
भव्यैर्महाद्भुतकृषीवलभावयुक्तः ।
जीव्यात्सदा स पुरुषोत्तमभावभव्यः
राधासमेतनवकृष्णसरूप एषः ॥

# अन्योक्तयः

लेखकः – वैद्यः, रामस्वरूपशास्त्री.
बालसंस्कृतसम्पादकः- मुम्बापुरी ७७

(१)

तरवो जडजुष्टरसा सकलाः
हिमतान्तलतासु दलं न फलम् ।
किमु गायसि पञ्चमतो विरसं
शिशिरे पिक नास्ति तवाऽवसरः ॥

(२)

सहकारतरुर्लुठितोऽस्ति जडैः
इह सन्ति भटा विकटाः करटाः ।
परपुष्ट रमस्व रहो विरतः
शिशिरे पिक नास्ति तवावसरः ॥

(३)

परिसर्पति जाड्यगतिस्तपनो
जडभीत इवाभवति ज्वलनः ।
पवनोऽपि च वाति सदैव जडः
शिशिरे पिक नास्ति तवावसरः ॥

# अष्टोत्तरशतदिव्यदेशस्तुतिः

श्री कांची प्र. भ. अण्णङ्गराचार्यस्वामिकृता

( सटिप्पणीका )

( पूर्वानुबधनः )

### ३८. कावलम्पाडिदिव्यदेशः

श्रीकावळम्पाडिसमाख्यदेशे श्रीनागपुर्यां लसति प्रभान्तम् ।
श्रीमत्कलिध्वंसिमुनीन्द्रगीतं कृष्णं प्रपन्नार्तिहरं प्रपद्ये ॥

### ३९. तिरुवेळ्ळक्कुळदिव्यदेशः

चतुर्वेदविद्विप्रसंघैः परीते प्रपुष्यत्तटाकाभिधे दिव्यदेशे ।
कलिद्विण्मु नीन्द्रस्तुते नागपुर्यां विराजन्तमीडे हरिं भक्तभोग्यम् ॥

### ४०. पार्थन्पळ्ळिदिव्यदेशः

श्रीनागपुर्यां कलिवैरिगीते श्रीपार्थशय्याभिधदिव्यदेशे ।
शेषे शयानं निगमान्तमृग्यं देवं प्रपद्ये कमलासहायम् ॥

इति चोलमण्डललसच्चत्वारिंशत्स्थलेश्वरान् देवान् ।
संकीर्त्य पद्यबृन्दैस्संतोषाब्धौ निमग्नहृदयोऽस्मि ॥

**इति चोलमण्डलस्थचत्वारिंशद्दिव्यदेशस्तुतिस्समाप्ता ॥**

अथ मध्यमण्डलस्थदिव्यदेशस्तुतिः

## १. श्रीदेहली [तिरुक्कोवलूर] दिव्यदेशः

श्रीदेहलीशं श्रितपारिजातं कासारपूर्वाऽऽद्यकवीन्द्रजुष्टम् ।
श्रीमत्कलिद्विट्कविना च गीतं लोकत्रयाकाममिदं स्तवानि ॥

## २. श्रीमहीन्द्रपुरदिव्यदेशः

श्रीमत्यहीन्द्रनगरे गरुडापगायास्तीरे विभान्तमुपयामि कलिद्विडीड्यम् ।
वेदान्तसूरिहृदयावसथं रमेशम् श्रीदेवनाथभगवन्तमनन्तसेव्यम् ॥

अथ पाण्ड्यमण्डलस्थाष्टादशदिव्यदेशस्तुतिः

## १ कुरुकापुरीदिव्यदेशः – आळ्वार्तिरुनगरी

आदिनाथभगवन्निलयाय श्रीशठारिमुनिराड्भवनाय ।
तन्मुनीन्द्रविनुताय नमस्तात् दिव्यभव्यकुरुकानगराय ॥

## २. श्रीवैकुण्ठदिव्यदेशः

ताम्रपर्णीतटोद्यद्वैकुण्ठनगरे स्थितम् ।
श्रीशठारिनुतं वन्दे श्रीवैकुण्ठाह्वयं हरिम् ॥

## ३ वरगुणमंगळदिव्यदेशः

वरगुणमङ्गलनिलये निषण्णममरेशमनिशमुपसेवे ।
श्रीकारिसूनुकलितस्तुतिलक्ष्यं नित्यसेवितं लक्ष्म्या ॥

[सशेषा]

केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि दीयन्ते । अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. क. ति.

## Names of Subscribers for Gairvani 1966.

| No. | Name | Rs. | Ps. |
|---|---|---|---|
| 66. | Karnatak university, Dharwar | 4 | C0 |
| 67. | C. Venkatramana 'yer, Chittoor | 4 | 00 |
| 68. | C. L. Prabhakar M. A., Poona | 4 | 00 |
| 69. | G. V Subbaiah Sastry, Nellore | 4 | 00 |
| 70. | P. Brahma Reddy, Konkuduru | 4 | 00 |
| 71. | S. R. Sundara Iyer, Madras | 4 | 00 |
| 72. | Y. V. Thivariji, Sriramapur W. Bengal | 4 | 00 |
| 73. | Narayanamurthy, Allagadda | 4 | 00 |
| 74. | Prahlada Gupth, Allagadda | 4 | 00 |
| 75. | R. S. Prasad, Hyderabad | 4 | 00 |
| 76. | J. Muniratnam, Kaverirajapuram | 4 | 00 |
| 77. | H. M. Z. P. H. School, V. Kota | 4 | 00 |
| 78. | K. V. Vidyanathan, Neyveli | 4 | 00 |
| 79. | P. K Rajagopala Iyer Venkatapuram | 4 | C0 |
| 80. | Brahmachari Surendranath, Varanasi | 4 | 00 |
| 81. | Dr. Lakshminarasimham. Nagapatnam | 4 | 00 |
| 83. | H. M. Z. P. H. School, Pakala | 4 | 00 |
| 83. | N. Ramakrishnan, Coimbatore | 4 | 00 |
| 84. | N. Subramanyan, Mannargudi | 4 | 00 |
| 85 | K. M. Muralidharan, Pakala | 5 | 00 |
| 86. | K. B. Nagaraja Sarma, Hindupur | 5 | 00 |
| 87. | N. Ramanatha Sarma, Secundrabad | 4 | 00 |
| 88. | M. Durgaiah Sasty, Kesanakrru | 4 | 90 |
| 89. | J. Dakshinamurthy, Adoni | 4 | 00 |
| 90. | P. L. Narayanasasty, Kuchipudi | 4 | 00 |
| 91. | H. M. S. V. D. Oriental Secy, Scool Dwarakatirumala | 4 | C0 |
| 92. | Dr. D. Lakshminarasimhacharya, Guntur | 4 | 00 |

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R.C.No. 27-A 3/65 Date 14—7—65.

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिका:

सङ्कलयिता — श्री गोल्लापिन्नि वासुदेवशास्त्री
कल्याणदुर्गम्

अनन्तपदविन्यासं चातुर्यं मधुरं कवेः ।
बुधो यदि समीपस्थो न कुजन्मा पुरो यदि ॥

( पंडितस्य असान्निध्ये अज्ञस्य च सविधे कवेः कविताचातुर्यं सरसमेव भाति । अत्र ज्योतिश्शास्त्रविषयः ध्वन्यते — कवेः = शुक्रस्य, अनन्तपदविन्यासं चातुर्यं = आकाशसंचारचातुर्यं, सरसं = वर्षप्रदं भवति, यदि बुधः समीपवर्ती स्यात् कुजः स्वपुरतः न गच्छेत् तदा )

शरधिश्शरधिर्यस्य स रथः कुरश्शरः ।
बभूव सश्शं भवतां कुर्याद्भरतलक्ष्मणः ॥

( यस्य शरधिः = इषुधिः, शरधिः = समुद्रः, रथः, कुः = भूमिः, सः = विष्णुः, शरः = बाणः, बभूव, भेषु रतः भरतः = चन्द्रः, सः लक्ष्मणः चिह्नं यस्य सः = चन्द्रशेखरः, अरः = शिवः, भवतां = युष्माकं, शं = शुभं, कुर्यात ।

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate &
Secretary, S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor, (A. P.) C. 1500.